हवीमि । स नो भग पुर एता भवेह । [22] समध्वरायोषसो नमन्त । दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नः । रथमिवाश्वा वाजिन आवहन्तु । [23] अश्वावतीर्गोमतीर्न उषासः । वीरवतीस्सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनाः । यूयं पात स्वस्तिभिस्सदा नः ॥ ७१ ॥

---

[22] अथ हविषो याज्यामाह—अस्य भगदेवस्य प्रसादादुषसः उषःकालदेवताः अध्वराय यज्ञनिष्पत्त्यर्थं संनमन्त समनमन्त । तत्र दृष्टान्तः—दधिक्रावित्यश्वस्य नाम । अश्वो यथाऽऽधानकाले शुचयेऽग्निनिष्पत्तये पदाय आहवनीयायतने संभाराणामुत्तरतः पादेनाक्रमणाय संप्राप्नोति तथैवोषःकालदेवता अपि प्राप्नुवन्तु । अन्योऽपि दृष्टान्त उच्यते—वाजिनो वेगवन्तोऽश्वा यथा रथमावहन्ति, तथा नोऽर्वाचीनमस्माकमभिमुखं वसुविदं धनस्य लब्धारं भगदेवमावहन्तु इह कर्मण्यानयन्तु ॥

[23] अथ हविष एव विकल्पितां याज्यामाह । अश्वावतीः बहुभिर्गोभिर्युक्ताः वीरवतीः पुत्रपौत्रादिभिर्वीरैर्युक्ताः भद्राः कल्याणरूपाः घृतं दुहानाः घृतक्षीरादिद्रव्याणि संपादयन्त्यः विश्वतः प्रपीनाः सर्वमपि जगत्प्रकर्षेणाप्याययन्त्यः उषासः यथोक्तगुणविशिष्टा उषःकालदेवता भगस्य प्रसादात् सदं सदनं कर्मानुष्ठानस्थानं प्रत्युच्छन्तु प्रभातं कुर्वन्तु । हे उषासः यूयं स्वस्तिभिः क्षेमरूपैः फलप्रदानैः नः अस्मान् पात रक्षत ॥ अत्र विनियोगसंग्रहः—

विचक्षणा विचर्तुरः शर्मन्नर्विविसर्जनाय ब्रह्म वनं ब्रह्म स वृक्ष आसीत्तुरर्धिदेवाः प्रपीना एकं च॥

पीवोऽन्नान्ते शुक्रासस्सोमो धेनुमिन्द्रस्तरस्वा-न्छुचिमा देवो यातु सूर्यां देवीमहर्मस्मि ता सूर्याचन्द्रमसा नव ॥ ९ ॥

पीवोऽन्नामग्ने त्वं पारयानाधृष्यश्शुचि नु स्तोमं विश्रयमाणो दिवो रुक्मोऽन्नं प्राणं ता सूर्याचन्द्रमसा नवसप्ततिः ॥ ७९ ॥

हरिः ओम्.

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे द्वितीयाष्टके अष्टमप्रपाठके नवमोऽनुवाकः, अष्टमप्रपाठकस्समाप्तः.

द्वितीयाष्टकं च समाप्तम्.

ओं तत्सत्.

---

ता सूर्येति पशुद्वंद्वे चन्द्रसूर्याख्यदेवते ।
हिरण्याद्भ्यो वेहति स्यात्तासत्त्रोपहोमकः ॥ १ ॥
प्रातरग्निमिति प्रोक्तं पशौ स्याद्भगदेवके ।
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराज-साम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये अष्टमप्रपाठके नवमोऽनुवाकः

द्वितीयाष्टकं समाप्तम्.

ॐ तत्सत्.